परमानन्दं प्रणमत प्रकर्षेण भक्तिश्रद्धातिशयेन नमतवाङ्मनः कार्यै-र्च्चयता किं अर्चनायां फलमित्याकांक्षायां परमेश्वरप्रसादेन सत्यज्ञानादिलक्षणपरमात्मप्राप्तिरेव मुख्यफलमित्यभिप्रेत्य तं विशिनष्टि । सत्यमित्यादिना, सत्यमवाध्यं ज्ञानान्तरेण विषया-सत्वप्रतीतिः ।

Closing

गोपालं प्रभुलीलाविग्रहगोपालं कुलगोपालं,
गोपीखेलनगोवर्धनधृतिलीलाललितगोपालम् ।
गोभिर्निगदितगोविन्दस्फुटनामानं बहुनामानं,
गोधीगोचरदूरं प्रणमत गौविन्दपरमानन्दम् ।।४।।

अनंतो नाम तद्विद्धि बहुनाम सहस्रविष्णोः सुमतिं भजामह इत्यादिभिर्गोभिर्वेदैर्निगदितं गोविन्देति, स्फुटं प्रसिद्ध नाम यस्य सगोभिर्निगदितं गोविन्दस्फुटनामानं बहुनामानं। बहूनि असंख्या-तानि नामानि यस्य बहुनामानं सर्वाण्येतानि नामानि परस्य ब्रह्मणो हरेः इति परासरवचनात् असंख्यातनामानं बहुनामान-मित्यर्थः । तर्हि नामरूपसम्बन्धादसंगत्वहानिरित्यत आह गोधी गोचरदूरमिति । यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह इति श्रुतेर्गोधियोरगोचरत्वादगोचराद्धिगोचराच्च दूरो निर्गुणे निष्फले परमानन्द चिद्रूपे परमात्मनि शब्दप्रवृत्तिनिमित्तानां जातिगुण क्रियादीनांमसम्भवादवाङ्मनसागम्यमित्यर्थं, तदुक्तं षष्ठी जातिगुणक्रियादिरहिते सर्वस्य विज्ञातरि प्रत्यक्षे परिवर्जिताखिल-जगदद्वैतप्रपञ्च दृशासन्त्यक्तव्यवधानके विष्णोः पदे शाश्वतेत्यादि ।।४।।

603/27541 **पराङ्कुशपञ्चविंशति**

श्रीमते रामानुजाय नमः ।

Opening

श्रीपरांकुशनुतिं नुतिं य आतनोत्तत्पदाब्जपरमभक्तिचोदितः ।
तं वाधूलकुलभूषणं दयावारिधिं वरददेशिकं भजे ।

श्रीमन्पराङ्कशनिरंकुशतत्त्वबोधवात्सल्यपूर्णकरुणापरिणाहरुप: ।
सौशील्यसागरमनन्तगुणाकरं त्वां संसारतापहरणं शरणं व्रजेहम् ॥

कासारसंयमिमुखा: कमलासहाय: भक्ता: प्रपत्तिपदवीनियमामहान्त: ।
यस्याभवन्नवयवा इव पारतन्त्र्या तस्मै नमो वकुलभूषणदेशिकाय ॥

श्रीरङ्गराजपदपङ्कजसङ्गशीलं श्रेयं परं मधुरपूर्वकवेरपूर्वम् ।
नाथार्ययामुनयतीश्वरभागधेथंनाथं कुलस्य मम नौमि परांकुशायं ।

पापक्रियासु निरता: श्रुणुतास्मदुक्ति तापत्रयेण भविन: परितप्यमाना: ।
आपद्धनं मधुरिपोर्भवतामविद्या स्वापग्रहाणनिपुण: शरणं शठारि ।

**Closing** दैवात्वदीयणपथं दयया शठारे याहि प्रपन्नमिममुन्नतमदागसं माम् ।
कार्याक्रपासुमतिभि: खलु दु:खितेषु मया न मद्दशो भृशदु:ख भाजा ।

तस्मात्तवाखिलजनेषु च यानुकम्पा,
मय्येव तां शठरिपो निभृतं निधेहि ।

विश्वोपकारकमधार्णवतारकं त्वा–
मप्राप्य हे शठरि यो हत एव पूर्वम् ॥

अद्य त्वदीयक्रपया प्रतिलब्ध सन्त–
स्त्वत्सेवनामृतरसेन सुखी भवानि ॥

अत्राप्यमुत्रकरणत्रित्रयप्रवृत्या,
त्वत्पादपंकजजुषां विदुषां प्रसादम् ।
नित्यं लभेमहि न चान्यदपेक्षि,....
प्रत्यग्रकेसरपरिष्कृतकारिसूनो ॥

वाधूलवैंकटपतिं वरदार्यसूनु ।
मस्मद्गुरुं तव पदप्रवणं समीक्ष्य ।

अज्ञं कृतागसमनाथमकिञ्चनं मां,
त्वत्किंकरशठरिपो सततं कुरुष्व ।।

इति वरकुलधरं मुनिं वचोभिः,
श्रुतिसुखदेरधिकं प्रमोदयन्तम् ।
वरदगुरुवरं विचिन्त्य चेतो
मसममुपैति महत्तरं प्रमोदम् ।।

Colohpon ।। इति श्रीपरांकुशपञ्चविंशतिः सम्पूर्णा ।।

607/27851 **ब्रह्माष्टक**

Opening श्रीगणेशाय नमः ।।

अखण्डं चिदानन्ददेवाधिदेवं,
फणीन्द्रादिरुद्रादिइन्द्रादिसेव्यम् ।
सेव्यं मुनीन्द्राकविद्राादिचन्द्रादिमित्रं,
नमस्ते नमस्ते नमस्ते पवित्रम् ।।१।।

धरात्वं जलाग्निमरुत्वं नभस्त्वं,
घटत्वं पटत्वं अणुत्वं महत्त्वम् ।
मनस्त्वं वचस्त्वं अगत्वं दशत्वं,
नमस्ते नमस्ते नमस्ते समत्वम् ।।२।।

Clostng नरुष्टं नतुष्टं न इष्टं अनिष्टं,
न ज्येष्ठं कनिष्ठं नमिष्टं अमिष्टंम् ।
न अग्रं न पृष्ठं न तुल्यं गरिष्टं,
नमस्ते नमस्ते नमस्ते अहष्टम् ।।७।।

न वक्त्रं न घ्राणं न कर्णं न अक्षं,
न हस्तं न पादं न सीसं न लक्षम् ।
कथं सुन्दर........... सुधना मध्ययं,
नमस्ते नमस्ते नमस्ते प्रमेयम् ।।८।।

Colohpon ।। इति श्रीब्रह्माष्टकं स्तोत्रं सम्पूर्णम् ।।

## 640/27562 कूरनार्थविंशति

**Opening**

श्रीमते रामानुजाय नमः ।

श्रीरङ्गोज्वलमध्यवीतिनिलयं श्रीराममिश्रात्मजम्,
श्रीमहार्यपदाश्रयं शुभगुणं वाचा जयि भ्रातरम् ।
लोकार्थप्रवणं तदुक्तिरसिकं सर्वज्ञभट्टारकं,
वन्दे तं भुवि विंशतं व्यतनुत श्रीवत्सचिन्हस्य यः ॥१॥

श्रीरंगराजकरुणामयदृष्टिवीक्षा,
सम्प्राप्तसर्वगुणराजिविराजमाने ।
श्रीमच्छठप्रमथने स्थिरभाववन्धं,
श्रीवत्सचिन्हगुरुमन्वहमाश्रयामः ॥२॥

श्रीयामुनार्यपदपङ्कजसक्तचित्तो,
श्रीमत्पराकुंशगुरूत्तामलब्धविद्ये ।
श्रीलक्ष्मणे मुनिवरेर्पितसर्वभारं,
श्रीवत्सचिन्हगुरुमन्वहमाश्रयामः ॥३॥

**Closing**

उक्तां सुभाषितसुधां च निशम्य नाथ,
त्वद्वन्धु नास्ति मम चेत्यभयं चरामि ।
श्रीवत्सचिन्हभवताह्यभिभावितोह–
मित्यादरेण सततमपि रंगनाथः ॥

आसन्नदीनजनरक्षणवद्धदीक्षः,
विज्ञापनं त्विहमयोदितमुक्तिमात्रम् ।
सार्धं विचार्य सहसाद्य तवैव पूर्त्या
कूराधियोन्नमयमामिह सर्वथा त्वम् ॥

अर्वाञ्चो यत्पदसरसिजद्वन्द्वमाश्रित्यपूर्वे ।
मूर्ध्ना यस्यान्वय मुपगता देशिका मुक्तिमाप्ताः ॥

सोऽयं रामानुजमुनिरपि स्वीयमुक्ति करस्थाम् ।
यत्सम्वन्धादमनुत कथं वर्ण्यते कूरनाथः ॥

Colophon ॥ इति कूरे (रेश) विंशतिः सम्पूर्णा ॥

## 651/27530 गोविन्दराजप्रपत्ति

Opening

श्रीमते रामानुजाय नमः।

श्रीमन्निदानजगतां निखिलाण्डजात,
निर्वाहशक्तिमुखदिव्यगुणेकतान ।
अत्यन्तभोग्यनतदोषनिरस्तदोष,
गोविन्दराजचरणौ शरणं प्रपद्ये ॥१॥

नम्रीभवद् विधिशिवेन्द्रमुखादिते यः
चूडामणि प्रकरकान्तिकृताभिषेकौ।
य........ महीकरतलाम्बुरुहार्च्यमानौ
गोविन्दराजचरणौ शरणं प्रपद्ये ॥२॥

Closing

दुर्योधनेदुरभिमानिनीदुर्भराणा-
मग्रेसरे भजतिय; शिरसि प्रदेशम् ।
धन्येन यन्निकटस्थितमर्जुनेन,
गोविन्दराजचरणौ शरणं प्रपद्ये ॥

रारथ्यवेशसमलंकृतपाण्डुसूनुः
युद्धाङ्कणोज्वरथाञ्चलसन्निवेशौ।
सान्द्रेन्द्रनीलपरिभावुकभव्यरूपौ
गोविन्दराजचरणौ शरणं प्रपद्ये ॥

Colophon श्रीमते रामनुजाय नमः। इति गोविन्दराजाप्रपत्तिः सम्पूर्णा, श्रीरामार्पणमस्तु ॥ श्रीराम ॥

## 662/27799 दारिद्रचभञ्जनस्तोत्र

Opening श्रीगणेशाय नमः ।

ॐ कैलाशशिखरे रम्ये शम्भुं चन्द्रार्द्धशेखरम् ।
प्रजाम्नायसमायुक्तं पपृच्छ नगकन्यका ॥

श्रीपार्वत्युवाच —
देवेश परमेशान सर्वशास्त्रार्थपारगः ।
उपायं ऋणनाशार्थं कृपया वद साम्प्रतम् ॥२॥

श्रीमहादेव उवाच —
सम्यक् पृष्टं त्वया भद्र लोकानां हितकाम्यया ।
तदहं सम्प्रवक्ष्यामि सावधानावधारय ॥३॥

ॐ अस्य ऋणहरणस्तोत्रमन्त्रस्य सदाशिवऋषि अनुष्टुप्छन्दः ।
श्री ऋणहरणगणपतिर्देवता ग्लौं बीजं गःशक्तिः
गं कीलकं ऋणनाशार्थे जपे विनियोगः ।

ॐ गणेशऋणं छिन्धि वरेण्यं हुं फट् अथ ऋष्यादिन्यासः
ॐ सदाशिवऋषये नमः शिरसि अनुष्टुप्छन्दसे नमो मुखे

श्री कृष्णहरण गणपतये नमो हृदये ग्लौं बीजाय नमो ।
हृदय ग्लों बीजाय नमो गुह्ये गं शक्तये नमः ।

Closing

पञ्चाननाय फणिराज विभूषणाय,
हेमाम्वराय भुवनत्रयवन्दिताया ।
स्वर्गापवर्गफलदाय विभूतिदाय,
दारिद्रयदुःखदलनाय नमः शिवाय ॥५॥

चर्माम्त्रराय चितिभस्मविलेपनाय
भालेक्षणाय मणिकुण्डलमण्डिताय ।
मञ्जीरपादयुगलाय वृषध्वजाय,
दारिद्रयदुःखदलनाय नमः शिवाय ॥६॥

रामप्रियाय रघुनाथवरप्रदाय,
नारप्रियाय नगराजसुताप्रियाय,
पुण्योपपुण्यचरिताय सुरार्च्चिताय,
दारिद्रयदुःखदलनाय नमः शिवाय ॥७॥

मुक्ताय यज्ञफलदाय गणेश्वराय
गीतप्रियाय वृषभेश्वरवाहनाय।
मातङ्गचर्मवसनाय महेश्वराय,
दारिद्रयदुःखदलतायनमः शिवाय ॥८॥

वशिष्ठेन कृतं स्तोत्रं सर्वरोगनिकृन्तनम्
सर्वकामप्रदं नृणां हत्याकोटि विनाशनम् ॥९॥

ब्रह्मघ्नश्च सुरापो वा स्त्रीहन्ता गुरुतल्पगः।
शिवसायुज्यमाप्नोति यः पठेच्छिवसन्निधौ ॥१०॥

Colophon — इति श्री वशिष्ठकृतं दरिद्रविदीर्णस्तोत्रं सम्पूर्णम् ॥

### 677/27733 बाणलिंगस्तोत्र

Opening — जोगसारे पञ्चमपरिच्छेदे —
ब्राह्मे मुहूर्ते चोत्थाय य स्मरेत बाणलिङ्गकम्।
सर्वत्रजयमाप्नोति सत्यं सत्यं महेश्वरि ॥१॥

अथ बाणलिङ्गध्यानम्। तत्रैव—
ॐ प्रमत्तं शक्तिसंयुक्तं बाणाक्ष्यञ्च महाप्रभुम्।
कामबाणान्वितं देवं संसारदहनक्षमम् ॥२॥

श्रृङ्गारादिरसोल्लासं बाणाक्ष्यं परमेश्वरम्।
एवं ध्यात्वा बाणलिंगं यजेत्तं परमं शिवम् ॥३॥

मनसा गन्धपुष्पाद्यैः संपूज्य यः मनुं स्मरेत्।
तथा प्राणायामं ततो कृत्वा बाणलिङ्गं तु तोषयेत्।
तद्दिष्टदेवयोरैक्यं विभाव्यं वाक्भवं जपेत्।
ततो जपं समाप्याथ स्तवेनानेन तोषयेत्।
अथ स्तव —
ॐ बाणलिङ्गमहाभाग संसारात् त्राहि मां प्रभोः।

Closing — किमन्यत् कथयामीह सर्ववेत्सि कुलेश्वर।
महाभये समुत्पन्ने राजद्वारे कुलेश्वर ॥१५॥

देशान्तरे भयो प्राप्ते दस्यु चौरादि संकुले ।
पठनात् स्तवराजस्य न भयं लभते क्वचित् ॥१६॥

बाणलिङ्गस्य माहात्म्यं संक्षेपात्कथितं मया ॥
तस्य स्मरणमात्रेण नरो मोक्षमवाप्नुयात् ॥१७॥

बाणलिङ्गस्सदाराध्यं योगिनां योगसाधने ।
कौलिकानां कुलाचारे पशूनां शत्रु विग्रहे ॥१८॥

वेदज्ञानां वेदपाते रोगीनां रोगनाशने ।
यो यो नाराधयेद्देवं सर्वं तन्निष्फलं भवेत् ॥२०॥

**Colophon:** श्री इति श्रीयोगसारे सर्वाङ्गमुत्तमें पार्वतोशिवसम्वादे बाणलिगं स्तोत्रं सम्पूर्णम् ॥

685/27553 **मुकुन्दमाला**

**Opening** घुष्यते यत्र नगरे रंग यात्रा दिने दिने,
तमहं शिरसा वन्दे राजानं कुलशेखरम् ।
जयतु जयतु देवो देवकीनन्दनोऽयम्,
जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।।

जयतु जयतु मेघः श्यामलः कोमलांगो,
जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ।

मुकुन्दमूर्ध्ना प्रणिपत्य याचे,
भवन्तमेकान्तमियं तमर्थम् ।
अविस्मृतित्वच्चरणारविन्दे,
भवे भवे मेस्तु तवप्रसादात् ॥

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः
कुम्भीपाकं कुरुमपि हरे नारकं नापने तुम् ।
रम्या रामामृदुतनुलतानन्दने नाभिरन्तुम्
भावे भावे हृदयभवने भावयेयं भवन्तम् ॥

Closing :

श्रीवल्लभेति वरदेति दय परेति,
भक्तप्रियेति भवलुण्ठनकोविदेति ।
नाथेति नागशमनेति जगन्निवासे-
त्यालापमाप्रतिपदं कुरु मे मुकुन्द ॥

मज्जन्मनः फलमिदं मधुकैटभारे,
मत्प्रार्थनीयमदनुग्रह एष एव ।
त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्य,
भृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥

ध्यायन्ति ये विष्णुमनन्तमव्ययम्,
हृत्पद्ममध्ये सततं व्यवस्थितम्-
समाश्रितानां सतताभयप्रदम्,
ते यान्तु सिद्धिं परमां तु वैष्णवीम् ॥

यस्य प्रियौ श्रुतिधरौ नरलोकवीरौ,
मित्रे द्विजन्मनरपालसुतावभूताम् ।
तेनाम्बुजाक्षचरणाम्बुजषट्पदेन,
राज्ञा कृता कृतिरियं कुलशेखरेण ॥

Colophon : ॥ इति मुकुन्दमाला सम्पूर्णा ॥

## 724/27469 कुलप्रदीप

॥ श्रीगणेशाय नमः ॥ श्रीगुरवे नमः ॥

Opening :

गुरुं प्रणम्य प्रथमं नतोऽहं गणाधिप श्रीपरदेवताञ्च ।
मुदे महोपासककौलिकानां निबन्धमेकं रचयामि रम्यम् ॥

ग्रन्थेषु येष्वेषु सदाशिवेन सविस्तरः श्रीकुलमार्गउक्तः ।
प्रायः कलौ ते सुलभाः न सन्ति ज्ञानञ्च तेषां परमं दुरापम् ॥

गुरुकृपा यत्र भवेत्प्रसूना श्रीदेवतायाश्च महान् प्रसादः ।
तस्यैव पुंसां कुलशास्त्रबोधः तस्यात्रभक्तिर्न खिलापनोद्या ॥

येषां दृढाभक्तिरिहास्ति शास्त्रे विन्दन्ति सम्यक् सकलं रहस्यम् ।
प्राग्जन्मपुण्याद्विमलामनीषा ते निन्दका नाद्य भवन्ति लोकाः ॥

भीता पशुभ्यो निजगोपनार्थं विन्दन्ति केचित्कुलशास्त्रमेतत् ।
केचित्तु निन्दानिरता अबोधा दौष्ट्येन ये ते निरयेन………।।

साध्यस्य भक्तिः सुदृढात्रशास्त्रे प्रवर्त्ततां स स्वशुभाय नूनम् ।
यस्यास्ति सा नैव सभिन्नशास्त्रे प्रवर्त्ततां नन्दकतामुना हि ।।

Closing :

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा,
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता-
वने वा हर्म्ये वा समकरनिपातो य हिमकरः ।।

Colophon :

इति श्रीशिवानन्दाचार्यविरचिते कुलप्रदीपे सप्तमः प्रकाशः ।।

Post-colophonic

संवत् १६०४ लि०ची० गीरधारी श्रीगुरोश्चरणारविन्दप्रसादात् माघकृष्ण १३ गुरुवासरे शुभम् ।।

## 725/27794 कौतुकरत्नावली

Opening :

श्रीगणेशाय नमः । अथ कौतुकरत्नावली लिख्यते। पर्वतरत्नावलीतः चिकित्सा लिख्यते ।

संयोगादी…… तद्विविधशौर्यवता राज्ञा व्यसननिरसनकौतुकौपकारालोकनेनैव कालयापनं कर्तव्यम् इति उक्तवन्तः । प्राप्तावसराणि कौतुकानि संक्षेपतो निरूप्यन्ते । तान्येव कौतुकानि द्विविधानि । एका अर्थरूपाणि अपरा शब्दरूपाणि च । तत्र प्रथमार्थरूपाणि स्तम्भनवशीकरणवाजीकरणकृत्रिमवस्तुकरणं जनादृश्यकरणं वृक्षदोहदादि-भेदान्यनेकप्रकाराणि शब्दरूपाणि । द्वितीया तु शब्दालंकृतगद्यपद्योभया-त्मककाव्यरूपाणि तत्रार्थलक्षणं काव्यानां पण्डितापण्डितस्य धारणेन कौतुकावहानि । विचित्रप्रबन्धप्रहेलिकाविभक्तादिविश्लेषैकतिचन प्रस्तूयन्ते । उभयप्रकारा नानाभयं ...कौतुकाबहुलत्वाभावात् कौतुक-समानत्वमेव तवादावर्थरूपाण्युच्यते । तत्र च कौतुकाप्रयोक्ता परकृत-प्रतिकूलं सम्भावनायास्य शरीररक्षणपूर्वकमिव कौतुकानि प्रयुञ्जीते तद्यथा ।

नासारन्ध्रद्वयं लिह्वा गोघृतेन ततो मुखम् ।
क्षिपेत् वान्त्यफलो स्तस्य,..... गौर्न हि वर्धते ।।१।।

तगराञ्जितनेत्रस्तु तगरेवाथ धूपितः ।
पूर्वस्ताच्चविधि कृत्वा पश्चात्कौतुकमाचरेत् ।।२।।

'विना रक्षाविधानेन यः करोति स दुष्यति' तथा प्रायशो हस्तलाघवादिभूलेषु केशेषु केनचित् प्रयोगेषु प्रथमं प्रेक्ष्य कं दृष्टिवन्धनं कुर्वीत । तत्प्रकारस्तु प्रोच्यते:—

Closing : तमालपत्राञ्जनपद्मचन्दनं प्रियङ्गुभीरोचनया समासके।
कृताञ्जने नाञ्जितलोचनः पुमान् यं वीक्ष्यते तं कुरुते वशं जनम् ।।

पुनः—

लाक्षया रञ्जितं वासो बहुशः सूकरासृजा ।
भावितं शोषयित्वाथ तेन कुर्व्वीत वर्तिकाम् ।।

सौवीराञ्जनशूकानि चूर्णगर्भांशुवर्तुलाम् ।
सूकरस्नेहभरिते दीपपात्रे निधाय ताम् ।।

प्रज्वाल्य कज्जलंतस्मात् गृहीत्वा तेन यो नरः ।
अञ्जिताक्षो भवेत्तस्य सकलास्युर्वशास्त्रियः ।।

पुनः—

स प्रियङ्गुवचाकुष्टं सूक्ष्मेलानागकेसरः ।
ससर्ज रससिद्धार्थो धूपः सर्वार्थसिद्धिदः ।।

पुनः—

जटामांसी पञ्चमलं नखं कुन्दरुचिच्छुकैः,
लाक्षाकृष्णागरुस्पृक्वागन्धपत्रैस्समासकैः,
धूपसुगन्धनामारनाराचसन्निभः वशी-, (?)
करो त्रैलोक्यश्चमिति पूर्वैरुदाहृतः ।। (?)

पुनः—

कर्पूरमधुभल्लातशुकसंलिप्तसाधना ।
रमते यानि हृदये ताश्चतिष्ठति सन्ततम् ।।

पुनः—

वशीकरणम् ।

अगरं तगरं कुष्टं लज्जालुगिरिकर्णिका ।

शंखपुष्पी अधोपुष्पी शिखामयूरदुग्धिका ।।

चन्दनं कुङ्कुमं चैव रोचनं अस्म चम्पकम् ।

**726/26718 महालक्ष्मीरत्नकोश**

Opening :

भद्रकृत्या नमो देवि अङ्गिराऋषिरुच्यते ।
छन्दो गायत्रिमेव स्यात् भद्रकृत्या नमोस्तु ते ।।१।।

क्षं बीजं ह्रीं ततः फट्कीलकमुदाहृतम् ।
खट् फट् जहि हृदिन्यस्य महाकृत्येति मूर्ध्नि च ।।२।।

विधूमाग्निसमप्रोक्ता शिखायां तु प्रविन्यसेत् ।
देवि देवि महादेवि कवचं यस्य तत्परम् ।।३।।

मम शत्रून्निति प्रोक्ता विनाशयतु नेत्रके ।
नमो नमश्च तेऽस्त्रं स्यात् ततो ध्यायेन्महेश्वरीम् ।।४।।

कृष्णवर्णां वृहद्रूपां रक्तकुञ्चितमूर्द्धजाम् ।
शिरः कपालमालाञ्च विकेशीर्घूर्णिताननाम् ।।५।।

द्रंष्ट्राकरालवदनां नेत्रभ्रुकुटिलेक्षणाम् ।
रक्तनेत्रामतिक्रुद्धां लम्बजिह्वामधोमुखीम् ।।६।।

ऊर्ध्वंदक्षिणहस्तेन बिभ्राणाञ्च परस्वधम् ।
अधो दक्षिणहस्तेन बिभ्राणां शूलमूर्ध्वगम् ।।७।।

Closing :

भूपुरं द्वन्द्वसंयुक्तं तेषु मन्त्रं यथाक्रमम् ।
एतद्यन्त्रं समालिख्य सिसेचासाध्यवृक्षके ।।
विषवृक्षेऽथ वा लिख्य रिपोर्गेहे तु दक्षिणे ।
खनित्वा तु पुनः स्नात्वा सहस्रं प्रजपेद्वचः ।।
तद्दिनाद्रिपवः सर्वे प्रयान्ति यमसाधनम् ।।

ॐ अज्ञास्ये० १ ॐ त्वमिन्द्रो० २ ॐ आवर्तध्वं०
ॐ त्वं यमं० ४ ॐ एते जह्यं० ५

एतासामपि पूर्वोक्तं योगं यन्त्रं च पार्वति,
कृत्या सूक्तेन सदृशो नैव लोकेति कश्चन ।
गोप्यानामपि गोप्यञ्च परकृत्याविनाशनं,
सर्वक्षुद्रहरंश्रेष्ठं तव प्रत्यामयोदितम् ।।

**Colophon** इति श्रीमहालक्ष्मीरत्नकोशे त्रिसप्ततितमः कुमारसंहितायां अष्टादशोऽध्यायः ।

**Post Colophonic :** ।। श्रीशुभं भूयात् ।।

इति कार्तिक कृष्णा १२ गुरुवासरे तत्संवत् १९५८ लिपीकृतं पांचूराम शर्मा आत्मार्थं पत्र संख्या २१ ।।

## 784/27463 गीतगोविन्द-भावबोधिनी-टीकासहित

**Opening :** ।। श्रीगणेशाय नमः ।।

यत्सहितो गोपीनां हृदयाम्भोधौ सदा क्रीडां कुरुते ।
भवतरङ्गैर्जयति हरेरर्द्धमङ्गं सा ।।१।।

यद्रूपस्मरणाहितसंस्कारः कामिनीकान्तः भजति ।
जितेन्द्रियतायाः पदं हरिः सा सदा जयति ।।२।।

हरति हरेरपि चेतो यथा तथा नो हरिर्यस्याः ।
न क्षणभेदसहिष्णुः सा वृषभानोः सुता जयति ।।३।।

भावतनौ भावात्मा स्थिता स्वभावेन भाविता सततं ।
श्रीवल्लभाभिधानेतद्रूपा वा सदा जयति ।।४।।

गुरुजनलालनपुष्टदम्पतिनवनवास्वादकेऽत्र एव स्वेष्टमिति ता एवैतत्प्रबन्धमङ्गलतया पद्मावतीरमणो जयदेवीं वर्णयति मेघैरिति-कदाचिद्व्रजराजसदसि स्थितः प्रियो महद्वृष्टिभवनभिया स्वगृहगमनायाज्ञप्तोऽपि यदा ह्रिया गन्तुं न प्रवृत्तस्तदा व्रजराजे लाडलीपात सूचिवात्सल्यानुकूलपरिहासभंग्या प्रियां प्रत्युक्तम् ।

Closing : यद्राधर्वेत्ति तत्त्वतः प्रेमस्वरूपव्यञ्जनकुशलस्यातः प्रियैकतत्परस्य जयदेवस्य यदज्ञानतानतरङ्गेषु तद्भावसौन्दर्यं यच्च तद्ज्ञानजं दैण्णवं ध्यानं गौड्या सङ्केतितं प्रतिक्षणतद्भावसौन्दर्ययुक्तसर्वत्र तदीक्षणं ततस्तज्जवाह्यदशायां रसराजविवेचनकाले तत्त्वं तन्मयत्वं साश्चर्यानिन्दचेष्टितं तं ततस्तद्दृष्ट्वा सखीपठितेषु सैवं जातेति प्रियाविवेकरतुतिमयकाव्येषु सान्द्रलज्जाकोपचेष्टितं तत्सर्वं हेस्वशिष्या बोधप्रमुदिताः सुधियः सख्यः श्रिया निभृतेत्यादिगीतो नेत्रैकनिष्ठो यत्र तस्मात् प्रबन्धाद्वक्कव्युद्भूततया यत्र यत्र भावो न सम्यग्बुद्धस्तं तं सन्देहग्लानिरहितं कुर्वन्तु यतोऽस्य श्रवणात्त एव भावाः पुनर्भविष्यन्तीत्यस्य प्रबन्धस्यैतदेव माहात्म्यं हि ३०६

चञ्चलं हि मनो यस्य सेवनाद्धि रसायनम् ।
तद्वह्निशरणापत्तिरवश्या दीनचेतसाम् ॥१॥

वहिः प्रकाश्यमालिन्यं कूटे तस्य विनाशकम् ।
तापद्रवैकजनकं वह्निं कर्मेन्धनं भजे ॥

Colophon इति द्वादश सर्ग ॥ १२ सं. १८७५ जेठ सुदि १ श्रीरस्तु श्री.
ग्रन्थ सं. २०७१

Post-colophonic महाराज श्री बिरदसिंहजी कृत लघुटीका
गीतगोविन्दाख्यस्य ॥

## 786/27709 गीतगोविन्द-साहित्यालङ्कारनाम्नीटीकायुत

(नास्ति प्रथमं पत्रम्)

Opening : शृंगाररसप्रधानं गीतगोविन्दाभिधं प्रबन्धं विदधानोऽयं ग्रन्थं प्रतिपाद्य वस्तूपक्षिपन्नेव तन्निर्देशरूपं मङ्गलमाचरति ।

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहः केलयः ॥

राधामाधवयोः राधाभिधानाया गोपिकाया माया लक्ष्म्या धवस्य भर्तुः कृष्णस्य च यमुनाया कालिन्द्याः कूले तीरे प्रत्यग्रकुञ्जद्रुमं प्रतिमार्गलतागृहवृक्षं रताः केलयः अभिसारसम्भोगक्रीडाः जयन्ति उत्कर्षेणावर्त्तत इत्यर्थः ॥

राधामाधवयोरिति प्रयुञ्जनिः न शृङ्गारिततयाऽन्येभ्यो हरेर्लीलावतारेभ्यो वामनादिभ्योऽनेकनायिकावर्ज्जनचातुर्येण दाशरथिरामादप्यतिशयसूचयता न विप्रलम्भेन शृंगारः पुष्टिमर्हति । काषायिते हि वस्त्रादौ भूयान् रागोनुषज्यत इति नयानुरोधेन सपरिकरेर्ष्या मानानन्तरं सम्भोगोऽत्र काव्ये प्राधान्येन प्रतिपाद्यत इति ध्वनितम् ।

यमुनाकूल इति । सैकतवेदिकाकन्दुकखेलनादिप्रसङ्गेन सञ्जातप्रथमावलोकनेनाङ्कुरितस्य वृन्दावनगवादिचारणलीलासमयवादितवेणुनिनादाकर्णनकौतुकस्य व्याजमन्दहसितव्यञ्जितभावानुबन्धद्वितीयदर्शनेन पल्लवितस्य कुमारिकाजनोचितगौरीव्रताचरणाङ्गमज्जनार्थं कलिन्दतनयावतरणसमसमयसमायातहृततीरस्थापिताम्बरकृष्णयाचनापदेशनर्मालापपूर्वं जलनिविडितवसनतया सर्वाङ्गीणलावण्यविलोकनेन कुसुमितस्यानुरागस्यदुर्विषहविरहसन्तप्ततया क्वचिदपिस्थातुमशक्नुवत्यास्तीरकुञ्जकुसुमगयनमानीताया राधायाः क्वापि निर्वृत्तिमलभमानस्य प्रथमतदवलोकनादिसुभगप्रदेशदर्शनेनात्मानं विनोदयितुमागतस्य च कृष्णस्य विदग्धसखोविरचितप्रथमसमागमफलस्यापि सम्वादकतया उभयोरपि कालिन्दीरोधसः स्पृहणीयतमत्वम् ॥

**Closing :** अङ्गे ष्विति किं वदामि सख्यादिपदशब्दश्रवणेऽपि त्वत्समीपागमनसम्भ्रमेणैकमेव वलयादिकरचरणादिषु पूर्ववत्त्वद्धारितत्वत्सन्निवेशाययथातथास्मरणपूर्वं त्वन्नेत्रोत्सवादकं विभर्ति तथा औत्सुक्येनापर्यवसितमण्डनैव यत्रापि मन्दमारुतवशेन किञ्चिच्चलिति त्वामेव समीपमागतं मन्यते, तथा मन्यमानाशयनीयं रचयन्तीत्वदागमनहर्षनिर्भरमानसा भवति तथा जायमाना त्वामपश्यन्ती निमीलितनयना कथमत्रागतोऽपि क्व निलीय स्थितः किं बा मया विपर्यस्तमितित्रिनम्रवदना चिन्तयतीति भावः । एवं सख्याराधा.... ......

## 800/27830 राक्षसाभिधानकाव्य–सटीक

**Opening :** ।। श्रीगणेशाय नमः ।।

कश्चिद्वनं बहुवनं विचरन्वयस्थो-
वश्यां वनात्मवदनां वनितां वनार्द्राम् ।
तर्वर्यरिप्रदयुदीक्ष्य समुत्थितं खे,
नागामिमां मदकलः सकलां बभाषे ।।१।।

टीका–।।श्रीगणेशायः ।।

कश्चिदिति कश्चिदनिर्दिष्टनामा पुरुषः, बहुवनं बहुजलं वनं काननं विचरन् भ्रमन् सन्, खे नभसि उद्गतं तरूणामरिर्योऽग्निस्तस्यारिर्जलं तत्प्रदं मेघं वीक्ष्य वनं जलं आत्मा यस्य सः चन्द्रः कमलं वा तद्रुपतुल्यमुखीं वनितां स्त्रियं स्वीयामिति शेषः । इमां अग्रे वक्ष्यांमाण सकलां समग्रां वाचं बाभषे जगाद । कीदृशो ना वयस्थः तरुणः वयस्थस्तरुणो युवेत्यमरः, पुनः कीदृशः मदेन हर्षेण मद्यजेन चित्तभ्रमेण विकलः ज्ञानशून्यः व्याप्तश्च मधुरेतियावत् कीदृशीं स्त्रियं वश्यांस्वाधीनां सकलामिति स्त्रीविशेषणे चतुःषष्टिकलायुक्तां चातुर्येणैव युक्तां वा पुनः कीदृशीं वनेन जलेन आर्द्रा उक्षितां अस्मिन् काव्ये वर्षावर्णनं वसन्ततिलकावृत्तमिदं स्वयोनिभक्षध्वेत्यन्त भ्रान्तैर्गान्तिलगैर्भवेत् ध्रुवमिदं वृत्तं वसन्ताख्यकमितिलक्षणात् ।।

**Closing :** कालिदासकृतं काव्यं काठिन्याद्राक्षसभिधम् ।
पठित्वा मतिमन्दोऽपि पण्डितो भवति ध्रुवम् ।।२१।।

इति कालिदासकृतं काव्यं समाप्तमगात् ।

टीका–।।फलितार्थमाह।।

कालिदासेति कालिदासेन कृतं रचितमिदं काव्यं राक्षसाख्यं यो नरः पठते समूर्खोऽपि पण्डितो भवतीत्यहं मन्ये इति दिक् । इति नन्हूभट्टरचिता राक्षसाभिधानकाव्यस्य टीका समाप्ता ।।

**Post-Colophonic :** लीषतुं ब्राह्मणगौडराधावल्लभः की (कि) सनगढ़मध्ये मीति श्चाश्विनशुक्लपक्षे १५ रविवासरे मध्याह्ने संवत् १९०७ ।।

## 808/27470 भर्तृहरिशतकसुखबोधिनीव्याख्यासहित

Opening :

।। श्रीगुरुः ।।

चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभास्वरो,
लीलादग्धविलोलकामशलभः श्रेयो दृशाग्रे स्फुरन् ।
अन्तस्फूर्ज्जदपारमोहतिमिरप्राग्भारमुच्छेदयन्,
चेतः सद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ।।१।।

।। श्रीगुरुः श्रीगणेशाय नमः ।।

ज्ञानप्रदीपोहरः श्रीमहादेवः ज्ञानरूपः प्रदीपः ज्ञानप्रदीप एवं ज्ञान-रूपदीपस्वरूपः शिवो योगिनां चेतः सद्मनि चित्तगृहे विजयते विरा-जते कथं भूतो ज्ञानप्रदीपो हरः चूडात्तंसितचारुचन्द्रकलिका चञ्चच्छि-खाभास्वरः चूडा नाम जटाजूटस्तस्मिन् उत्तंसिता मुकुटरूपा या चारु-चन्द्रकलिका मनोहरचन्द्रिकला सैव चञ्चच्छिखा देदीप्यमाना ज्वाला तया भास्वरः दीप्यमानः । पुनः कीदृग् लीलादग्धविलोलकामशलभः लीलया क्रीडया दग्धो विलोलश्चपलः कामरूपः शलभः पतङ्गो येन सः पुनः श्रेयो दृशा मोक्षदृशा मुक्तिवर्तिस्तस्या अग्रे स्फुरन् सन् अन्तस्पूर्ज्ज-दपारमोहतिमिरप्राग्भारमुच्छेदयन् अन्तः संसारमध्ये स्फूर्जद् विलसत् अपारमोहतिमिरो मोहान्धकारस्तस्य प्राग्भारो विस्तारस्तं उच्छेदयन् नाशयन् सन् एवं भूतो हरो ज्ञानप्रदीपो योगिनां चित्तगेहे विराजते ।

Closing :

चला लक्ष्मीश्चलाः प्राणाश्चलं जीवितयौवनम् ।
चलाचले च संसारे धर्म एको हि निश्चलः ।।१०७।।

Colophon :

।। श्रीमद्भर्तृहरिविरचितं वैराग्यशतकं सम्पूर्णम् ।।

टीका—

लक्ष्मीश्चला प्राणा अपि चलाः पुनर्वित्तयौवनमपि जीवनतारुण्य-मपि चलं एवं भूते चलाचले संसारे एको धर्म एव निश्चलो वर्तते।१०८।

श्रीमत्पुष्करव्यासस्य श्रीनाथेन सूनुना,
वैराग्यशतकस्यास्य टीकेयं सुबोधिनी ।।
निर्मिता स्वात्मबोधाय यथार्थास्वादिनी मया,
विद्वद्भिर्मत्परं त्यक्त्वा शोधनीया प्रयत्नतः ।।

Post Colophonic : इति श्रीव्यासनाथेन व्यासपुष्करदासात्मजेन विरचिता भर्तृहरिकृतकाव्यटीका सुबोधिनी समाप्ता । श्रीगुरुजी चरणारविन्दप्रसादात् श्रीरस्तु कल्याणमस्तु श्री जी ।।

## 813/27824 शब्दबन्धकाव्य सटीक

Opening : ।। श्रीगणेशाय नमः ।।

नानाननेननानेन नूनं नुन्ना निनोननु ।
नोनान्ननीनिनानैनो ननानिनु नना निनुः ।।१।।

तौतातितततातीति तं तुं तेंततितां तता ।
तातततत्ततताती तततोतितु ततातति ।।२।।

कैंकाकिकं किकुः केकिकेकाकाकुककांकके ।
काकैंककेककौ कोककोककोककांकके ।।३।।

मायामायामयामायि यामयामेय मायया ।
यामेयामेमुयायाया मायामयमयीमये ।।४।।

Closing : मन्दारदामम्रदिमाभिरामा,
सन्दानदाकम्रतमानुरागे ।
मन्दावदाताम्रतमाधरा सा
मन्दाक्षदानम्रगमान्तरास्ति ।।१५।।

नायकोऽनुभूयमाह मन्दारेति । मन्दारपुष्पाणां दाम माल्यं तद्वन्मृदुत्वेन आभिरामा रम्या कम्रतमोऽतिकामुकः 'कम्रः कामयिताभीक' इत्यमरः। तस्यानुरागे सन्दानं वन्दनं ददातीति सन्दानदा श्वेतरागविषयकत्वसम्पादिकेत्यर्थः। मन्दावपातं नवोद्भिन्नं आम्रं आम्रदलं तदिवाधरो यस्याः रक्तत्वात्कोमलत्वाच्च मन्दाक्षदं लज्जाज्ञापकं आनम्रं गमात्तरं विलक्षणं गमनं यस्याः औद्धत्यविरहाद्गमनस्यानम्लत्वोदया ईदृशी सा नायकास्ति । अत्रैकपादविषमाक्षरोत्तरंद्वितीयाद्यक्षरस्याद्वितीयादि पादाक्षरवाचने स एव पादो भवति एवमर्द्धद्वयस्योपर्य्यधो भावेऽपि ।।१५।।

## 817/27580 सभातरङ्गसार

Opening : ।। श्रीगणेशाय नमः ।।

नत्वा शिवं प्रथमतः प्रणिपत्य चण्डीं,
वाग्देवतां तदनु तातपदं गुरूंश्च ।
संगृह्यते किमपि यत् सुजनास्तदत्र,
चेतो विधातुः मुदिता कृपणा मयि स्युः ।।१।।

जगन्नाथेन मिश्रेण तेनैव क्रियतेऽधुना ।
नाम्ना सभातरङ्गोऽयं संग्रहः सत्सुखावहः ।।२।।

सारस्वते स्फुरतु चेतसि सत्कवीनां,
... भवन्तु कृतिनो गतमत्सराश्च ।
भूपाश्च सन्तः कविसूक्तिषु मानुरागाः ।
सन्त्यज्य भण्डकजनप्रणयानुरागा ।।३।।

अथ महतां प्रशंसाः—

ददाति प्रतिगृह्णाति गुह्यमाख्याति जल्पति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ।।४।।

प्रकाममभ्यस्य तु जातु विद्यां सौजन्यमभ्यासवशादलभ्यम् ।
कर्णौ सपत्न्यः प्रविसारयेयुर्नसारयेयुर्नयने कदाचित् ।।५।।

.... ... ... .... ...

का विद्या कविता विनार्थिनिजने दानं विना श्रीश्च का
को धर्मः कृपया विना, क्षितिपतिः को नाम नीतिं विना ।
कः शिष्यो विनयं विना, कुलबधू का स्वामिभक्तिं विना ।।६।।

सौजन्यामृतसिन्धवः परहिते प्रारब्धवीरव्रता,
वाचालाः परवर्णने निजगुणालापे च मौनव्रताः ।
आपत्स्वप्यविलुप्तवीर्यनिचयाः सम्पत्स्वनुत्सेकिनो,
माभूवन्खलुवक्त्रनिर्गतविषज्वालामहाः सज्जनाः ।।७।।

Closing : अथ रत्नान्योक्तय:—

यस्य वज्रमणेर्भेदे भिद्यन्ते लोहसूचिकाः ।
करोति तत्र किं नाम नारीनखविलेखनम् ।।१।।

सोमकान्तो मणिः स्वच्छः सूर्यकान्तमणिस्तथा ।
उद्गारे तु विशेषोस्ति तयोरमृतवह्निता ।।२।।

स्फाटिकस्य गुणो योऽसौ स एवायाति दोषताम् ।
धत्ते स्वच्छतयाच्छायां यतो मलवतामति ।।३।।

सुधाकरस्पर्द्धि बहिर्द्रवति सर्वतः ।
चन्द्रकान्तमणेस्तेन मृदुत्वं लोकविश्रुतम् ।।४।।

भ्रष्टं नृपतिकिरीटाद् भूमौ पतितं तिरोहितं रजसा ।
विधिविलसितेन रत्नं जनचरणविडम्बनां सहते ।।५।।

आघ्रातं परिलीढमुद्रनखरैः क्षुण्णं स्वयं चर्वितम्,
क्षिप्तुं यद्वतनोः रसत्वकुपिते नेति व्ययां मा कृथाः ।
हे माणिक्य तवैतदेव कुशलं यद्वानरेणाग्रहा-
दन्तः सत्त्वनिरूपणाय सहसा चूर्णीकृतं नाश्मना ।।

Colophon : ।। इति सभातरङ्गसारः ।। ।। नारायणाय नमः ।।

## 834/27984 पण्डितमुखमण्डन

Opening : ।। श्रीगणेशाय नमः ।।

भृङ्गिप्रस्तुतगीतिमञ्जिममिलत्तद्भल्लरीभङ्कृति,
स्फूर्यं(जं) ड्डिडिममञ्जुनादमुरजन्यस्तैकहस्तोत्पलम्
अङ्गत्रस्यद……माद्यनटनक्षिप्ताग्रपादाम्बुज,
प्रोद्यद्घर्घरिकाभणत्कृतिदलद्ब्रह्माण्डमीशं भजे । १।।

उद्धृत्य सर्वसारं ग्रन्थानालोक्य सर्वशः ।
सुमतिः कोऽपि सुभाषितमेतत्पण्डितमुखमण्डनं कुरुते ।।२।।

अथ दशावतारवर्णनम् । तत्रादौ मत्स्यावतारः ।

चन्द्रादित्योरुनेत्रः कठिनमलभवस्फारपृष्ठः प्रतिष्ठो,
भास्वन्कालाग्निजिह्वः पृथुलगलगुहाद्दष्टनिःशेषविश्वः ।
अद्भिः प्रच्छोच्छिताभिश्शकितसुरवधूर्लोकसंसूचिताभिः,
मत्स्यः क्षीराब्धिवेलागगनतलमलक्षालयन् वः पुनातु ।।३।।

कूर्मः—

निःप्रत्यूहमनल्पकल्पचलितत्रैलोक्यरक्षागुरुः,
क्रीडाकूर्मकलेवरः स भगवान् दिव्यादमन्दां मुदम् ।
कल्पान्तोदधिमध्यमज्जनवशात्....संलुठन्,
पृष्ठे यस्य बभूव सैकतकणच्छायं धरित्रीतलम् ।।४।।

Closing : उत्खातं निधिशंकया दिव (क्षि) तितलं ध्यातागिरेर्ध्वान्तवो
निस्तीर्णस्सरितांपतिर्न पतयो यत्नेन सन्तोषिताः ।
मन्त्राराधनतत्परेण मनसा नीतश्मशाने निशा,
प्राप्तैकापि वराटिका न च मया तृष्णेऽधुना मुञ्च माम् ।।६६।।

आदित्यस्य गतागतैरहरहः संवीक्ष्यते जीवनम्
व्यापारैर्बहुकर्मभारगुरुभिः कालो न विज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासाश्च नोत्पद्यते
पीत्वामोहमयीप्रमादमदिरामुन्मत्तभूतं जगत् ।।६०।।

मृद्वीका रसितासिता समसिता स्फीतं निपीतं पयः,
स्वर्यातेन स्वधाप्यधाय कतिधाः रम्भाधरः खण्डितः ।
सत्यं ब्रूहि मयी (दी) यजीव भविता भूयो भवे भ्राम्यताः
कृष्णेत्यक्षरयोरयं मधुरिमोद्गारः क्वचिल्लक्षितः ।।६८।।

रामाय नमः । कृष्णाय नमः ।।

## 888/27462 सिद्धान्तरत्नावली

Opening : ।। श्रीइष्टदेवो जयति ।।

श्रीमद्विष्णुपदाब्जमङ्गुलिदलं सद्ज्ञानकिञ्जल्कितं,
पीयूषोन्मकरन्दमुद्यदसमा नाराजितं स्वोद्यतम् ।

योगीशामरकिङ्करालिनिवहैः पेपीयमानं मुदा
ज्ञानानन्दभरप्रदायि नितरां सञ्चिन्तये संविदे ।।१।।

बुद्ध्वाध्वा गुरुशासनान्नतगुरुर्व्याकृत्य गाथार्णवात्
सत्सारस्वतनौश्रितः सुमतिदः श्रीपाणिनीयोत्सटः ।
सोऽहंसाधु समुद्धरेत्सुमनसां सन्तोषयित्रीं सदा,
सत्कण्ठाभरणाय माधवसुधीः सिद्धान्तरत्नावली ।।६।।

सारस्वतं मत्यनुसारनस्तत्प्रक्षेप्य कालुष्यनिराशहेतौ,
व्याख्यामहं व्याकृतिमप्यनल्पैर्हास्यो नचास्यां गुणग्रह्यसद्भिः।७।

तत्र सारस्वतीं प्रक्रियामृजुं चिकीर्षुः श्रीमदनुभूतिस्वरूपाचार्य-
स्तदविघ्नसमाप्तिप्रचयगमनशिष्टाचारावनार्थमिष्टदेवपरमात्मप्रणति
मंगलमाचरन्विषयप्रयोजनसम्बन्धाधिकारिणोऽपि सूचयन् प्रतिजानीते
प्रणम्येत्यादिना श्लोकेन ।

Closing : प्रकारस्य स्त्रीभुवो रित्फवद् भवति भ्रुवै भ्रुवे भ्रुवा भ्रुवः २ भ्रुणां भ्रुवां २ भ्रुवीति· शेषं सुगमं वधूजंवादीनामिति । एषां तु विशेषान्तराभावान्नित्यमटि नदीशब्दवत् रूपाणीज्ञेयानीत्यर्थः हेवध्वि-ति धौ ह्रस्व इति ह्रस्वे धिलोप जस्येति ऋदन्तत्व साम्यात्सेरित्यादि प्रक्रियाऽस्य पितृशब्दवत् स्यादित्यर्थः । नत्वाभाव इति पुंस इत्युक्त-त्वात्सो नः पुंसः । इत्यस्याप्रवृत्तेरितिशेषः ख ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

(अन्तिम अंश अप्राप्त)

## 926/27510 वृत्तरत्नाकर-ललिताक्षराटीकायुक्त

Opening : ।। श्रीगणेशाय नमः ।।

यत्पादाग्रनखांशुराजिगरुणानम्रालिके राजते,
तत्कालागरुसम्पदः पदततिः सद्यावकां काकिलः ।
तं नत्वा जलमङ्गलैकवसतिं सङ्कल्पकल्पद्रुमं,
श्रीमत्पार्श्वजिनेश्वरं मदगजं मोहाङ्घ्रिपोन्मूलने ।।१।।

गुरोः प्रसादादधिगम्य वृत्तिं रत्नाकरश्छन्द स उद्यमेन ।
सारं मया किञ्चिदथास्य वृत्तिर्विधीयते मुग्धप्रबोधहेतोः ।।२।।

मयाऽत्रशास्त्रान्तरदर्शनेन प्रोद्भूतमत्यार्थविशेषबोधात् ।
व्याख्यायते केवलमेव सूत्रं पुरातनोदाहरणावलीतः ।।६।।

ग्रन्थारम्भे स्वीकृतशिष्टसमयप्रतिपालनातिभारो ग्रन्थकारो निखिलविघ्नाचलत्कुलिशाकारं अभिमतदेवतानमस्कारं मुनिजनमनोवशीकरणधात्री आत्नोऽचयनाम्नी प्रेक्षावत् प्रवृत्तिनिमित्तमयमभिधयादित्रयं श्लोकत्रयेण कमेण प्रतिपादयन्नाह । तत्रायमाद्यश्लोकः ।

सुखसन्तानसिद्धयर्थं नत्वा ब्रह्माच्युतार्चितम् ।
गौरीविनायकीपेतं शङ्करं लोकशङ्करम् ।।

शङ्करं शिवं नत्वा प्रणम्य किमर्थं सुखसन्ततिः प्रत्यूहानभ्य सामान्यशास्त्रादिनिर्माणं समुत्पन्नानन्दसन्दोहः सिद्धिः परमं पदं तदर्थम् ऐहिकपारत्रिकसौख्यनिमित्तमित्यर्थः । तद्विशेषणैस्तत्सहिमानमाविः करोति यथा कथं भूतं शङ्करं ब्रह्मे ति ब्रह्माविश्वकर्ता अच्युतः सनातनः पुरुषो विष्णुस्तयोरर्च्चितः पूजितः सहितस्तं तथा तत्सेव्यमित्यर्थः पुनः कथंभूतं लोकैकिलोकः सप्तभुवनात्मकः तस्य शं सौख्यं करोतीति तथा विश्वविश्वप्रसाददानक्षममित्यर्थः अनेन च यो देवपूजितो देवः सेव्यः सकललोकानुग्रह समर्थश्च भवति स एव नमस्कारमर्हतीत्युक्तम् ।।

Closing : मद्वृत्तरत्नाकरनामधेयशास्त्रस्य वृत्तावधिकार एषः ।
प्रस्तारनष्टादिकवर्णनोऽत्र सोमोदितायामजनिष्ट षष्टः ।।

वादिश्रीदेवसूरेर्गुणगणनविधौ विश्रुतः शारदाया,
नामप्रत्यक्षपूर्वं सुजयमदमृतो मङ्ग ......
पादद्वन्द्वारविन्दे बुधमधुपयितेभृङ्गमङ्गि दधानो
वृत्तिं सोमेऽभिरामाममरुतकृतिमतां वृत्तरत्नाकरस्य ।।

अन्यच्च—

प्रमादादौत्सुक्यात्कविक्वचिदनवबोधेनयदि वा.
ममैतस्यां वृत्तौ सहृदयजनाः कोमलमते ।
अवन्ध्यं चेत्किञ्चिद् भवति भवतामञ्जलिरियं,
प्रसादं कृत्वा तत्प्रगुणमतिभिः साध्यमखिलम् ।।

Colophon : इति सी (शि) वचन्द्रविरचिता वृत्तरत्नाकरस्य ललिताक्षरानाम्नी टीका सम्पूर्णता पफाण

## 931/27967 श्रुतबोधप्रबोधिनीटीकासहित

Opening :

मूल.—

छन्दसां लक्षणं येन श्रुतमात्रेण बुध्यते ।
तमहं सम्प्रवक्ष्यामि श्रुतबोधमविस्तरम् ॥१॥

टीका:—

॥ श्रीराधाकृष्णाभ्यां नमः ॥

नत्वा गुरुपदद्वन्द्वं बालानां सुखवृद्धये ।
क्रियते वासुदेवेन श्रुतबोधप्रबोधिनीम् ॥१॥

श्रोतृजनप्रवृत्तये स्वचिकीर्षितग्रन्थ नाम यथार्थं निवध्नन् प्रतिजानीते । छन्दसामिति ग्रन्थकृत् कथयति अहं कालिदास नामा कविः तं श्रुतबोधं सम्प्रवक्ष्यामि तं कं येन श्रुतमात्रेण छन्दसामनुष्टुब्रादीनां असाधारणधर्म्मं बुध्यते ज्ञायते ननु छन्दो ज्ञानाय छन्दः कोशादयोऽनेके ग्रन्थाः सन्ति किमपूर्वाऽऽरम्भेणानेन इत्याशङ्कानिरस्यति कथंभूतं श्रुतबोधं अविस्तरं न विद्यते विस्तारो बाहुल्यं यस्मिन् स अविस्तरः तच्छन्दः कोशादीनां विस्तरत्वात् श्रुतमात्रेणाज्ञानात् लक्षणं दृष्ट्वान्तयोः पृथगवस्थानात् तैर्बालानां छन्दोज्ञान····दात् अत्र तु लक्षणदृष्टान्तयोः स्व स्व पद एव निरूपणत्वात् श्रुतबोधत्वं एतैर्नान्वर्थसंज्ञेयमिति सूचितम् ॥१॥

॥ श्रीराधादामोदरौ जयतः । श्रीराधाकृष्णाभ्यां नमः ॥

॥ श्रीरामः ॥

Closing : ह्रस्वोवर्णः स्यात्सप्तमो यत्र वाले ?
तद्वद्विम्बोष्ठि न्यस्तएकादशाद्यः ।
वार्णैर्विश्रामो यत्र चेद्वातुरङ्गै—
र्नाम्ना निर्दिष्टा सुभ्रु सा वैश्वदेवी ॥२४॥ श्रीः ।

हे बाले! हे विम्वोष्ठि! बिम्वफलवत् श्रोष्ठौ यस्याः सा बिम्वोष्ठी तत्सम्बुद्धौ सा नाम्ना वैश्वदेवी निर्दिष्टा कथिता । सा का यत्र हेसुभ्रु सुष्टु भ्रुवौ यस्याः सा तत्सम्वुद्धौ, सप्तमं वर्णः ह्रस्वः स्यात् तद्वत्तयैव एकादशाद्यो दशमो ह्रस्वः न्यस्तः स्यात् । यत्र बाणैः पञ्चाक्षरैः तुरङ्गैः सप्ताक्षरैर्वा विश्रामो भवति ।।२४।।

।। श्रीराधागोविन्दाय नमः । श्रीदशरथात्मजाय नमः ।।

## 934/28045 काव्यकौस्तुभ

Opening : दृष्टान्तेनाल्पवर्णेन महतोऽर्थस्य कीर्तनम् ।

उदाहरणम्ः—

नृगवत्सर्गतिं याति यो ब्रह्म स्वापहारकः ।

अत्र नृगवदित्यनेन नृगाख्यायिका व्यक्तिः ।

पद्येन लघुना वास्या गम्भीरार्थप्रकाशनम् ।

यथा—

निजभक्तसुखार्थं यः कालमप्यतिवर्त्तते ।
पुरुषाय नमस्तस्मै कस्मैचित्पुरुषतेजसे ।।१।।

रावणेन निपीडितैः सुरैरभ्यर्थितो भगवान् ।

द्वापरे एव तद्विनाशकालं त्रेतायां प्रकल्प्य तं विजघान । आदित्यादि तोशितश्च तत्सुखाय बलिवृद्धिकालमन्यथयन् बलिं दूषयामासेति । पद्यादस्मात्प्रकाशते ।

अपारानन्दविज्ञप्तिर्यस्यिन्न्यूनपदादिभिः ।

यथा—

सस्मिता मृगशावाक्षी गाढ़मालिङ्गिता मया ।
मा मा मेति यदब्रूत तन्मे कृन्तति मानसम् ।।१।।

Closing : केचन दोषाः सन्ति ते तूक्तेषु दोषेष्वन्तर्भवन्त्यतः पृथक् न लक्ष्यन्ते । तथाहि वैफल्यमप्रसिद्धिरित्ययोग्यता चानुप्रासस्य दोषः । स चापुष्टार्थत्वं प्रसिद्धिविरोधः प्रतिकूलाक्षरत्वं च । क्रमेणोदाहरणम्—

सुन्दरो नन्दपुत्रोऽसौ कंसस्त्वद्वंशनाशनः ।

अत्रानुप्रासो वाच्यपोषकत्वाद्विफलः ।

वृन्दारकाणां सन्दोहः कुन्देन्दुप्रतिमो बभौ ।

अत्र सर्वेषां देवानां शौक्ल्यमप्रसिद्धं शिखण्डिताण्डवे भामाकामकाण्डैर्विखण्डिता अत्र शृङ्गारे गौडीरीतिरयुक्ता यमकस्य त्रिपाद्यां स्थितिरप्रयुक्तता ।

यथा—

सारसं तत्र पश्यन्ति सारसं नवयौवना ।
प्रेयसी श्रीहरौ सुभ्रूः सरसं प्रत्यपद्यत ।।१।।

उपमायामसादृश्यासम्भवावनुचितार्थता । क्रमेणोदाहरणम्—

हंसः करीव निर्भाति विधुवत्पाण्डुरं वचः ।

अत्र मरालगजयोः सादृश्यं नास्ति । वचसि शौक्ल्यमसम्भवि उपमानस्य जातिप्रमाणगते न्यूनत्वाधिक्ये च । तथा क्रमेणोदाहरणम् ।

विप्रोऽयं सर्पवद्दीप्तो दधिबिन्दुनिभो विधुः ।
अत्र जात्या प्रमाणेन च न्यूनता ।
दीर्घायुर्द्रोणिवत्काको वेणीयं यमुनोपमा ।
अत्र जात्या प्रमाणेन चाधिक्यम् ।

नवप्रभः सम्प्रति काव्यकौस्तुभः,
प्रभाति विद्यैकविभूषणेन यः ।
आलोकतस्तस्य जनैः सुबुद्धिभिः,
परीक्ष्यतामेष नु काव्यपूरुषः ।।

विद्याभूषणगदितं गदितं तत्र काव्यकौस्तुभं बिभ्रत् ।
तिष्ठति यदि कमनीयो मननीयोऽसौ न किं सदसि ।।१२।।

निखिलाङ्गसुन्दरोऽयं नवरसभृत्काव्यकौस्तुभो ग्रन्थः ।
व्रजपतिसुताय सौख्यं सूर्याभिख्याय संदद्यात् ।।१३।।

**Colophon :** इति श्रीकाव्यकौस्तुभे शब्दार्थालङ्कारनिर्णये नवमी प्रभा समाप्ता ।।

समाप्तोऽयं काव्यकौस्तुभो ग्रन्थः । ग्रन्थमानं सार्द्धसहस्रम् ।

रामाब्धिनागभूवर्षे तपस्ये मासि पक्षके ।
कृष्णे बुधे पञ्चम्यामलिखत्काव्यकौस्तुभम् ।।१।।

श्रीवल्लभकुलतिलका भक्ताः श्रीकृष्णचन्द्रस्य ।
दामोदरा वदान्या जीयासुश्चिरतरं जगति ।।२।।

पुत्रास्तेषां लालजिन्नामधेया विद्यावन्तो विद्भिरानन्दनीयाः ।
भूपैर्वन्द्याः सद्गुणैः श्लाघनीया रूपैर्मुख्याः सज्जनैर्दर्शनीयाः ।३।

व्यासाः शुभकरणाख्या विख्याता भुवि गुणैः,
तेषां प्रमोदकृतये तदात्मजो हरिकरणनामेदम् ।
सोजिताख्ये पुरे चैव वसमानो द्विजालये,
सुखेन सद्गुरूणाञ्च प्रसादाच्छ्रीपतेः सदा ।।४।। ।।कुलकम्।।

## 945/27820 रससिन्धु

Opening : गुणकीर्त्तनलक्षणम्

सौन्दर्यहसितालापैर्नास्त्यन्यस्तत्समो युवा ।
इति वाणी भवेद्यत्र तदित्थं गुणकीर्तनम् ।।

यद्वक्त्रं हसितेन्दुमण्डलमिदं स्फारं तदालोकितम्,
सा वाणी जितकामकार्मुकरवा सौन्दर्यमेतस्य तत् ।
इत्थं सन्ततमालिवल्लभतमध्यानप्रसक्तात्मन-
श्चेतश्चुम्बितकालकूटमिव मे कस्मादिदं मुह्यति ।।

उद्वेगलक्षणम्—

यस्मिन् रम्यमरम्यं स्यान्न च हर्षाय किञ्चन ।
प्रद्वेषः प्राणितव्येषु स उद्वेगः स्मृतो यथा ।।

अग्न्यागारं कलयसि पुरश्चक्रवाकीव चन्द्रम् ।
बद्धोत्कम्पं शिशिरमरुता दह्यते पद्मिनीव ।।

प्राणान् धत्से कथमपि बलाद् गच्छतः शल्यतुल्यान् ।
तत्केनासौ सुतनु जनितो मान्मथस्ते विकारः ।।

**Closing :** तत्र रतिभावाभासोदाहरणं यथा:—

वन्दीकृत्य नृपद्विषां मृगदृशस्ता: पश्यतां प्रेयसां,
शिलष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिका: ।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे-
र्विध्वस्ता विपदोऽखिलास्तदितरै: प्रत्यर्थिभिस्तूयसे ।।६।।

अत्र राजविषयकरति: प्रत्यर्पिता बलात्कारकृतत्वादनुचितेति रति-भावाभासा: । यथा वा—

त्वयि लोचनगोचरं गते सफलं जन्म नृसिंहभूपते ।
अजनिष्ट ममेति सादरं युधि विज्ञापयति द्विषां गण: ।।

एवं देवादिविषयकरतिभावाभासोदाहरणानि ज्ञेयानि व्यभिचारि-भावाभासस्योदाहरणम् । यथा—

राकासुधाकरमुखी तरलायताक्षी,
सा स्मेरयौवनतरङ्गितविभ्रमास्या ।
तत्किं करोमि विदधे कथमत्र मैत्रीं,
तत्स्वीकृतिव्यतिकरे क इहाभ्युपाय: ।।

अत्र किं शब्देन जिज्ञासितवाचकेन चिन्ताख्यो व्यभिचारिभावो व्यज्यते। तस्याश्चागतिकत्वेन व्यर्थसद्भावाभासत्वं एवमन्यान्यपि द्वात्रिं-शदुदाहरणानि ज्ञेयानि ।

इति रसाभासभावाभासावुक्तौ ।।

इति श्रीमत्पौण्डरीकरामेश्वरकृते रससिन्धौ भावादिनिरूपणं नाम चतुर्दशतमं रत्नम् ।।

**Closing :** समाप्तोऽयं रससिन्धुनामा ग्रन्थ: ।।

**Post-Colophonic :** श्रावणमासे कृष्णपक्षे ७ चन्द्रवासरे संवत् १८६७
का. शा. १७३२ प्रतिलिखितं ब्राह्मण मुरलीधर जैपुर ।।
मध्ये लिखायतं वैष्णव सुरतरामजी ।।

अन्वर्थनामा रससिन्धु एष, व्यधायि रामेश्वरपौण्डरीकै: ।

ग्रन्थो मनोज्ञो विलसन्ति यस्मादस्मिन्नुसमस्ता रसरीतयस्ता: ।।
श्रीरामाय ।।

## 982/27460 वृत्तमाणिक्यमाला

Opening : ।। श्रीगणेशाय नम: ।।

श्रीमत्सिन्दूरपूरारुणतनुरतनुद्योतविद्योतिताशो,
दानाम्भ: पानलुब्धा मधुकरपटलीगेण्डपालीं ददान: ।।
वन्दीकृत्यान्धकारानिव समुपगतो मण्डलश्चण्डरश्मे:,
प्रत्यूहव्यूहमुच्चैरपनयतु ममान्हाय वेतण्डतुण्ड: ।।१।।

ग्रन्था: सन्तीह रोगप्रकटनपटवोऽनेकशो दीर्घदीर्घा:,
कर्तुं तत्र श्रमं न प्रभुरिति तत एव साहाय्यसारं ।
कण्ठे धातुं त्रिमल्लो रचयति हि निजे वृत्तमाणिक्यमाला,
नाम्ना ग्रन्थं क्षमध्वं बुधभिषज ? इदं चापलं वा नमोऽस्तु ।।२।।

वात: पित्तं कफश्च प्रकृतिसुमुखित: कायमूलंङ्गहस्तद्-
वैषम्यं हीनमिथ्याधिकमभिजनकं तस्य कार्यार्थकर्म ।
किञ्चित्तत्रापि वच्मि स्फुटमिहपवनादेर्विवृद्धेर्निमित्तं
ह्रासस्याप्यस्य रूपाण्यपि भवति यतोऽह्नाय दोषप्रबोध: ।।३।।

Closing : एषा श्रीमाधवोक्तं क्रमंत्त इह मया वृत्तमाणिक्यमाला,
छन्दोभि: स्कन्दवरकुस्वरनयनमितै: स्रग्धराख्यैरवादि ।
एतज्जन्येन पुण्येन तु भवतु भव: श्रीभवान्याभिजुष्ट-
स्तुष्टस्त्रैलोक्यसर्गस्थितिलयघटन व्यग्रहद्दक्कोणपात: ।।२६२।।

Colophon : इति श्रीत्रिमल्लनिर्मिता वृत्तमाणिक्यमाला निदानदानरूप
समाप्ता ।

Post-Colophonic : संवत् १८९७ माघकृष्णा ९ शनिवासरायां ।

## 1001/28030 तिथिचूड़ामणि

**Opening :**

।। श्रीगणेशाय नमः ।।

प्रणम्य पुष्पदन्ताख्यौ शारदागणनायकम् ।
तिथिसिद्धिकामदुघां करोम्यज्यामतिस्फुटाम् ।।१।।

विघ्नेशं च गिरिं गुरुं हरिहरब्रह्मार्कमुख्यान् ग्रहान्,
नत्वा चैव गुरोः पदाब्जयुगलप्राप्तः प्रसादः सुधीः ।
श्रीमद्भास्करकेशवादिरचितान्वीक्ष्य द्विचूडामणिः,
शिष्यप्रार्थनया करोमि सुगमं तिथ्यादिशुद्ध्यै स्फुटम् ।।२।।

वर्तमानशकः यत्र स्थासन्तशकवर्जितः ।
तदङ्कोन्मितकोष्ठस्थः फलं शाकफलान्वितम् ।।३।।

तिथिभयोगसंक्रान्ति ध्रुवाः केन्द्रसमन्विताः ।
भवन्ति चक्राभ्यधिकास्तेभ्यश्चक्राणि शोधयेत् ।।४।।

**Closing :**

न्यस्ताधिकघटीं निघ्नमन्तरं तेन युक् स्फुटं,
तेनोनितालभोगः स्यात् सूक्ष्मार्कघटिकादिकम् ।।१७।।

आसीदुन्नतदुर्गनाम्नि नगरे श्रीवायुनाम्नौपितौ ?
ज्यौतिःशास्त्रविचारसारचतुरश्रीषोषनाख्यो द्विजः ।
तत्सूनुर्मतिमांस्तु तेन रचितः श्रीरामचन्द्रेण च,
वीक्ष्य सद्गणकैः सदा समुदितैः तिथ्यादिचूडामणिः ।।१८।।

**Post-colophonic** श्रीरामचन्द्रविरचिता चूडामणिः लिखिता विक्रमपुरे सं० १८२० वर्षे ।

## 1002/27876 तिथिनिर्णय

**Opening :**

।। श्रीगणेशाय नमः ।।

प्रणम्य श्रीगणाधीशं विघ्नविध्वंसनक्षमम् ।
बालबोधाय संक्षेपात् क्रियते तिथिनिर्णयः ।।१।।

तत्र वत्सरायनर्त्तुमासपक्षदिवसभेदात्कालः षड्विधः । तत्र मास-
त्रैविध्येन वत्सरस्त्रिविधः । तदुक्तं ब्रह्मसिद्धान्ते-

चान्द्रसावनसौराणां मासानां तु प्रभेदतः ।
चान्द्रसावनसौराः स्युस्त्रयः संवत्सरा अपि ।।

तत्र चान्द्रः सम्वत्सरः चैत्रशुक्लप्रतिपदादिः फाल्गुनमासान्तः । सौरस्तु मेषादिर्मीनान्तः सावनः षष्ट्युत्तरशतत्रयाहोरात्मकः—

Closing : फाल्गुने मासि पूर्णिमा आसाढ़े कार्तिके मासि चैत्रे ज्येष्ठे च पूर्णिमा मन्वादयः स्नानदानश्राद्धेष्वानन्त्यपुण्यदा ।।

Colophon : इति श्रीगोस्वामिशिवानन्दभट्टविरचितस्तिथिनिर्णयः सम्पूर्णः ।।१।। रामार्पणमस्तु ।

Post-colophonic सं० १८३१ फाल्गुनशुक्लद्वादशी १२ चन्द्रे व्यासश्रीकेशवात्मजभवानीशङ्करेण लिखितमदः पुस्तकम् । श्रीः ।।

## 1004/27872. त्रिस्कन्धभूषण

Opening : ।। श्रीगणेशाय नमः ।।

यो निर्गुणो विश्वमिमं तनोति
सत्त्वादिरूपैः सुरवन्दिताङ्घ्रिः ।
कालात्मकोऽप्यात्मविदां तमात्मा
देवाधिदेवं द्युमणिं नमामि ।।१।।

नूनं बहुभिराचार्यैः कृतः प्रश्नविनिर्णयः ।
तद्वाक्यपरितोषार्थं वक्ष्ये त्रिस्कन्दभूषणम् ।।२।।

लग्नेश्वरो भूमिपतिर्निरुक्तो होरेश्वरः कार्यपतिस्तथैव ।
दिनेश्वरस्तत्पुनरेवसाक्षी फलं नराणां त्रिभिरेभिरूह्यम् ।।३।

Closing : अथ मृगया ज्ञानमाह—

होरेश्वरो रन्ध्रगतः शुभो वा ह्याखेटकं तत्सफलं नृपाणाम् ।
पापोऽथवा लाभगतो न चाप्तिस्त्रिस्थो विलम्बाच्चरमाच्चशीघ्रम् ।।४२।।

गुरूपदेशान्नृपतेः सभायां करोति यः प्रश्नमिमं हि विद्वान् ।
न तस्य वाक्यं प्रभवेदसत्यं दिनेश्वरानुग्रहतः कदाचित् ।।४३।।

**Colophon :** इति श्रीद्विवेदियुगराजविरचितं स्कन्धभूषणप्रश्नग्रन्थसमाप्तम् ।।

**Post-colophonic** संवत् १६११ रा मिति आश्विनशुक्लाष्टम्यां शुक्रवासरे
लिषितं ब्राह्मण उदीचरामनारायणशर्मणेन स्वार्थं ।
।। श्रीरस्तु ।।

## 1008/27523 नक्षत्रमालिका

**Opening :** ।। श्रीमते रामानुजाय नमः ।।

रम्यजामातुरार्यस्य चरणाम्बुरुहं भजे
शठारेर्यशलताशुद्धा चित्रा नक्षत्रमालिका ।।१।।

श्रीमान्मरांकुशमुनिर्जीयाद्यद्ज्ञानमुद्रया ।
नेन्द्रियाश्वयुजो नृणां नित्यं विषयवीधयः ।।२।।

यदुरसि भरणीया स्त्रग्विकसितवकुलानद्धा ।
स जयति महिमानाथो मुररिपुः यदसक्तो नः ।।३।।

**Closing :** जन्मध्वंसं दिशतु जनानां वक्तुन्दीप्रोष्ठपदमनोज्ञम् ।
मन्दस्मेरं मधुरकटाक्षं सुभ्रूरेकं सुभगकपोलम् ।।

लसति हि भजतां भद्रोत्तरपदकरणादूढम् ।
शठरिपुमुकुटं भासापरिहृतदुरितध्वान्तम् ।।

अन्तरेण शठरान्तिकः संसारेऽवतीहनः ।
तदिदं हृदये नित्यं निदधेऽन्तस्तद्वपुश्रियम् ?।।

वाचकी वरिवश्या मे तारकामालिकात्मिका ।
पराङ्कुशपराब्जेन परिष्कारवती भवेत् ।।

**Colophon :** इति श्रीनक्षत्रमालिका सम्पूर्णा ।।

## 1014/27505 भुवनदीपक

Opening : ।। श्रीगणेशाय नमः ।।

सारस्वतं नमस्कृत्य महः सर्वतमोपहम् ।
ग्रहभावप्रकाशेन ज्ञानमुन्मील्यते मया ।।१।।

ग्रहाधिपा उच्चनीचा अन्योऽन्यं मित्रशत्रवः ।
राहुर्ग्रहोच्चनीचादिः केतुर्यत्रावतिष्ठति ।।२।।

स्वरूपं ग्रहचक्रस्य वीक्ष्य द्वादशवेश्मसु ।
निर्णयोऽभीष्टकालस्य यथालग्नं विचार्यते ।।३।।

टीका—श्रीगणेशाय नमः ।
विश्वस्य भूषणं ज्ञानपोषणं ध्वान्तदूषणं,
यूषं विभावरीरोगिप्राणिनां नौमि पूषणम् ।
सुगमं सर्वैः ज्ञेयं यद्गूढं तज्जगदाधरेण मया,
प्रतिपदकथनैर्भुवनदीपकशास्त्रं बहिर्नेयम् ।।२।।

तत्र तावद्ग्रन्थारम्भे शिष्टाचारपरिपालनाय सकलान्तरायनिवारणाय च ग्रन्थकृत्स्नं (कृण्वन्) मङ्गलाचरणमाचरति । तदाशीर्नमस्क्रियावस्तुनिर्देशश्चेति त्रिविधम् । अत्र स्वाभीष्टदेवताप्रणतिपूर्वकं ग्रन्थसिद्धि प्रतिजानीते सारस्वतमिति । मया ग्रन्थकर्त्रा ग्रहभावप्रकाशेन ग्रहाणां सूर्यादीनां भावफलस्य प्रकाशेन प्रकटनेन, यद्वा ग्रहाणां भावानां राशीनां प्रकाशेन फलकथनेन ज्ञानं त्रैकालिकं उन्मील्यते दृष्टिगोचरीक्रियते । किं कृत्वा सरस्वत्या इदं सारस्वतं महस्तेजो नमस्कृत्य नत्वा, ननु बराहमिहिरज्योतिषाचार्यैः रविर्नमस्कृतः कथमनेन सारस्वतं महो नमस्कृतमितिहेतुरुच्यते । तेषां मते रवेर्दर्शनेन नित्यनैमित्तिकादिवैदिकक्रियाः प्रवर्त्तन्ते । अतस्तु उदयेन तत्कृतशास्त्रस्य वेदाङ्गत्वात् त्रैवर्णिकैरेतच्छास्त्रमध्ययनीयं अर्थं तु क्षपणक, एतन्मते रविणा कृतेऽपि प्रकाशे हृत्स्थं तमो विनिवर्तते। ततः सारस्वतमहसा ज्ञानमुत्पद्यते । ततो मुक्तिः तदुक्तं—'ऋतेज्ञानान्नमुक्तिः' अतः सारस्वतमहो नमस्करणादिदं ज्ञायते यत्सर्वैः ज्ञातिभिर्ग्राह्योऽयं ग्रन्थः ।

**Closing :** ग्रहभावप्रकाशाख्यं शास्त्रमेतत् प्रकाशितम् ।
जगद्भावप्रकाशाय श्रीपद्मप्रभसूरिभिः ।।६१।।

इति श्रीपद्मसूरिविरचितं भुवनदीपकं सम्पूर्णम् ।
।। श्रीरस्तु कल्याणमस्तु ।।

टीका—इति
यथामति यथाधीतं शास्त्रं भुवनदीपकम् ।
गदाधरद्विजेनेदं व्याख्यातं स्वसुताय तत् ।।

**Colophon :** इति भुवनदीपकटीका समाप्तिमगात्

**Post-Colophonic :** सं० १६०० मिती फा० शु० ८ चन्द्रवासरे लिखितं
ओझा अमरचन्द्र छावणी नसीरावादमध्ये ।

## 1041/27138 जन्मसमुद्र

**Opening :** अयं जन्माम्भोधिः जन्मसमुद्रो नाम ग्रन्थः समुल्लसेत् । कैरष्ट-कल्लोलैः यः किं विशिष्टोऽनन्तयोगस्तासां निधिः अनन्ता असंख्या ये योगास्तेषां मध्ये रत्नं तुल्याः प्रधानो ये योगा गर्भसम्भवाद्यास्तेषां निर्धिनिधानं यो गम्भीरतावधिर्गम्भीरतायांरवधिः सीमा....वहुलार्थत्वात् यः सुधी वराभिगम्य सुष्ठु शोभना धीर्बुद्धिर्येषां ते सुधियो विद्वांसस्तेषां मध्ये वराः प्रधाना लक्षणयुक्ताः सर्वज्योतिष्षु शास्त्रज्ञास्तैरभिगम्यो व्याख्येयस्तैः सेव्य इत्यर्थः । अथ समुद्रपक्षेऽयमम्भोधिः समुद्रः उल्लसेत् ।

**Closing :** श्रीमद्विक्रमवत्सरात्रिनयना धीषैत्र वर्षैत् यौ,
मासे शुद्धचतुर्दशी शनि दिनै चन्द्रावतीपत्तने
चैत्येकारि कुमारपालानृपतेर्वृत्तिर्वकाशा.... (भिद्या),
योधसस्याजरचन्द्रइन्द्र नृप मां पर्यायरूपामिमाम् ।।

**Colophon :** इति श्रीकाश ...गच्छीयश्रीसिंहस्ताच्छिष्यः श्वेताम्बरश्रीनरचन्द्रोपाध्यायकृतायां वृत्तिवेडासंज्ञायां जन्मसमुद्रप्रश्नशतसहोदरायां जन्मसमुद्रवृत्तीः ।।६।।

श्रीसिन्धुहठशूरारिं शिष्टभाष्यकृतिं स्तुवे ।।२।।६।।
ग्रन्थाग्रं १७३२ जन्मसमुद्रनामटीका ।।६।।६।।६।।

## 1063/26830 वर्षफलपद्धति

Opening : आकर्ण्य गर्जितं यस्य विवस्त्राः कविदिग्गजाः ।
पितृव्यं तन्निजं नत्वा गुरं श्रीमद्विहारिणम् ।।१।।

नानाताजिकमालोक्य....फलफलपद्धतिम् ।
कुर्वे दैवविदां तुष्ट्यैश्लोकसंस्कृतसंस्कृता ।।२।।

तत्र तावदस्य वर्षफलस्य लेखानुक्रमणिकेयं....शास्त्रप्रवीणनप्रशंसा-श्लोकाः आशीर्वादश्लोकाः लेख्याः । ततः कलिसंवच्छकसंवत्सरसन्नयन-ऋतुमासपक्षतिथिवारनक्षत्रयोगकरणदिनमानरात्रिमानं तत्कालिका-वर्चभुक्तांशतत्काललग्नांशं होरादिभिर्वर्षसमयो लेख्यः, ततो ग्रहाणां स्वाभाविकग्रहकुण्डली च लेख्या, ततो दृष्टिचक्रं च लेख्यं, ततो सिद्धान्तोक्ताः सगतिकास्तात्कालिका ग्रहा लेख्याः, ततस्तन्वाद्याद्वादश-भावाः संधिसहिताऽद्य लेख्याः, ततो राश्याद्या मुन्थापि लेख्याः, ततो भावकुण्डली च लेख्या, ततस्तन्वादिद्वादशभावफलानि विस्तरेण लेख्यानि, ततो द्वादशवर्गिकाचक्रं तत्फलं च लेख्यं, ततो ग्रहाणां पञ्च-वर्गीचक्रं लेख्यं, ततः पञ्चवर्गबलानि लेख्यानि, ततः पञ्चाधिकारणो-लेख्यः, ततः वर्षेसो लेख्यः, ततो वर्षेसफलञ्च लेख्यः, तज्जन्मसमयो लेख्यः, तत्र मुन्थापि लेख्याः, ततो मुन्थाफलञ्च लेख्यं, ततः इष्टा-शालादियोगचतुष्टयफलानि च लेख्यानि,ततोऽरिष्टानि लेख्यानि,ततो-ऽरिष्टभङ्गोऽपि लेख्यः, ततः हरिस्थानानि लेख्यानि, ततो सहमानि लेख्यानि ततो सहमकुण्डली च लेख्या, ततो ग्रहाणां दशानयनार्थं हीनां-शापात्यंशाश्च लेख्याः, ततो ग्रहाणां लग्नस्य च महादशालेख्याः । ततो द्वादशानां योगाश्च लेख्याः, ततो दशाफलानि लेख्यानि, तन्मध्येभाव-फलानि च लेख्यानि, तन्मध्येस हमोदभावफलानि लेख्यानि, ततस्त-न्मध्येऽन्तर्दशाचक्रं च लेख्यं, ततस्तन्मध्ये ग्रहाणामन्तर्दशा च फलानि लेख्यानि, ततो मासवेशसमयो लेख्यः, ततो मासवेशस्वाभाविकग्रह-

कुण्डली च लेख्या, तत्र वर्षप्रवेशवत्स ... द्वादशभावादिकार्यं ततो वर्षेशवन्मासेसफलं लेख्यं, तत्रमासवेससमयोत्थग्रहभावफलानि लेख्यानि, ततः किंचि.... पञ्चवर्गिकानुसारेण फलञ्च लेख्यं, इतिवर्षफललेखनानुक्रमणिकाः। अथ फलानि तत्रादौ दृष्टिफलम्।

Closing : आचार्यवर्यश्रीम....हरिदैवज्ञशिष्यदैवज्ञश्रीमद्देवकीनन्दनमासद्वयकृताब्दवेशफललघुपद्धतिः। अस्तु।

Post-colophonic फाल्गुनोज्वलप्रतिपदभृगुवासरे लिपीकृतम् वलिभद्रपुरे ऋखिदेवराजेन ग्रन्थमान ६११

श्रीरस्तु कल्याणमस्तु।